अथानेनानयनेन सममण्डलच्छायानयनार्थमुदाहरणम्।—
यस्मिन् देशे पञ्चाङ्गुला पलभा तत्र यदाशीत्यधिका सप्तशती क्रान्तिज्या ७८० तदाष्टाविंशत्यधिकसहस्रद्वयं २०२८ समशङ्कुः। अथ वा पञ्चचत्वारिंशदधिकाष्टशती ८४५। अनेनानयनेनाप्ययं समशङ्कुरागच्छति। तद्यथा।—तत्र देशेऽक्षज्या द्विदन्तेन्दुमिताष्टादशविकलाधिका ११२२। १८। पलप्रभा ५ व्यासदलेन निघ्नी १७१९० दिग्ज्योद्धृता। अत्र दिग्ज्या पूर्णम् ०। अनेनोद्धृता जातः खहरः $\frac{१७१९०}{०}$। एतां पलभां प्रकल्प्याक्षज्या किल साध्या। अस्या वर्गाद्द्वादशवर्गेण सहशच्छेदेन शून्यीभूतेन युक्तान्मूलं जातः कर्णः पलभा सम एव $\frac{१७१९०}{०}$। त्रिज्या पलभया गुण्या तत्कर्णेन तत्समानेनैव भाज्या। एवमक्षज्या भवति। अत्र तुल्यत्वाद्गुणकभाजकयोः शून्ययोः पलभातुल्ययोश्च नाशे कृते त्रिज्यैवाक्षज्या जाता। तदनुरंशा नवति ८० दृशः। नवतिः शोधितोऽस्त्रो लम्बः पूर्णम् ०। अथ "तया विनिघ्नी" इत्यादि।—तया त्रिज्यातुल्ययाक्षज्यया ३४३८ क्रान्तिज्या ७८० गुण्या स्वदेशाक्षज्ययानया ११२२।१८ भाज्या। एवं कृते समशङ्कुरुत्पद्यते। इयमिष्टक्रान्तिज्या जाता २०२८। अत्र लम्बः पूर्णम् ०। अयमिष्टक्रान्तिज्याधनुषा किल्लाधिकः कर्त्तव्यः। एवं कृते उन्नतांशा भवन्ति। तेषां जीवा स शङ्कुः। एवं स एव सममण्डलशङ्कुर्भवति। एवं यदा क्रान्तिज्या पूर्णं भवति तदा खगुणश्चिन्त्यश्च "शेषविधौ" इत्यादिसूत्रोक्तया शून्यपरिभाषयापाममशङ्क्वादीनि साधितान्यन्येषामनुपातार्थं ॥ कश्चिद् दूषयन्ति।

इदानीं प्रकारान्तरेणेष्टादिकक्षायामाह।—

व्यासार्द्धवर्गः पलभाकृतिघ्नो
दिग्भाकृतिर्द्वादशवर्गनिघ्नी।

तत्संयुतिः स्यात् प्रथमस्तथाऽन्य-
स्त्रिज्याग्रभाघ्राभिहतिस्ततस्तौ ॥ ४८ ॥
दिग्ज्याग्रयोर्वर्गवियोगभक्तौ
यदन्यवर्गेण युतायराशेः ।
पदं तदन्योनयुतं श्रुतिर्वा
गोलक्रमादिष्टदिशं गतेऽर्के ॥ ५० ॥
स्यादग्रकाया यदि दिग्ज्यकाल्पा
तदाऽन्यवर्गात् प्रथमेन हीनात् ।
मूलेन हीनः सहितो द्विधाऽन्यः
कर्णद्वयं स्यादिति सौम्यगोले ॥ ५१ ॥

एकत्र त्रिज्यावर्गः पलभावर्गेण गुण्योऽन्यत्र दिग्ज्याहति-र्द्वादशवर्गेण गुण्या। तयोराश्योर्योगः प्रथमसंज्ञः स्थाप्यः। अथ त्रिज्याया अग्रभाया अग्रायाश्च तिसृणां घातोऽन्यसंज्ञश्च स्थाप्यः। अथ दिग्ज्याया अग्रायाश्च वर्गान्तरेण तावाद्यान्या-वपवर्त्यौ। ततो य आद्यराशिस्तस्मादन्यराशेर्वर्गेण युताद्यत् पदं तदन्येन राशिनोनं सदुत्तरगोले दक्षिणगोले तु युतं सत् "इष्टदिशं गतेऽर्के" छायाकर्णो वा भवति। अथोत्तरगोले यदि दिग्ज्याग्रायाः सकाशादल्पा भवति तदाऽन्यराशेर्वर्गात् प्रथमेन हीनाद्यन्मूलं तेनान्यराशिरेकत्र हीनोऽन्यत्र युतः सन् द्विधा कर्णो भवति। यत्र युतः कृतस्तत्र सममण्डलादुत्तरस्थेऽर्के यत्र हीनः कृतस्तत्र दक्षिणस्थ इति ज्ञेयम्। कदाचिदुत्तरतोऽपि कर्णद्वयं भवति।

अत्रोपपत्तिर्बीजगणितप्रक्रियया। तत्राव्यक्तं याकारोप-लक्षितं त्रिज्याग्रादिका आद्याक्षरोपलक्षिताः कृत्वा बीज-प्रक्रिया प्रदर्श्यते। तद्यथा।—छायाकर्णप्रमाणं यावत्तावत् १। अस्माद्भुजः साध्यः। "त्रिभज्याग्रहताऽर्काग्रका कर्णनिघ्नी"इत्यादिना

दक्षिणगोले उत्तरा जाता कर्णवृत्ताग्रा या. च १ / त्रि १। इयं कर्णवृत्ताग्रा पलच्छायया संस्कृता जातो भुजः या. च १ वि. त्रि १ / त्रि १। अस्मात् "त्रिज्याहतोऽसौ प्रभया विभक्तः" इत्यादिना दिगग्रा साध्या। अयं त्रिज्यागुणितः या. च १ वि. त्रि १। कर्णवर्गाद्द्वादशवर्गेऽपनीते जातश्छायावर्गः याव १ रू १४४। "वर्गेण वर्गं गुणयेद्भजेच्च" इत्यनेन पूर्व्वराशिवर्गो भाज्यः। पूर्व्वराशेर्योर्वर्गः क्रियते तावत् प्रथमं यावत्तावद्वर्गगुणितोऽग्रावर्गः। ततो याकारगुणितोऽग्रात्रिज्यापलभानां घातो द्विगुणस्ततः पलभावर्गगुणस्त्रिज्यावर्गो रूपराशिरन्त्ये भवति। स तेन छायावर्गेण भक्तो जातः याव. चव १ या. च वि. त्रि २ विव. त्रिव १ / याव १ रू १४४। अयं फलं दिगग्रावर्गः। अतोऽयं दिगग्रावर्गेण समः क्रियते। अत्र पक्षौ समच्छेदीकृत्य छेदगमे तयोः शोधनार्थं न्यासः याव. चव १ या. च. वि. त्रि २ विव. त्रिव १ / याव. दिव १ या० दिव १४४। अत्र "एकाव्यक्तं शोधयेदन्यपक्षात्" इत्यादिना समशोधने कृते जातं प्रथमपक्षे प्रथमस्थाने दिगग्राग्रावर्गान्तरं यावद्वर्गगुणितं द्वितीयस्थाने त्रिज्याग्रापलभाभिहतिर्द्विगुणिता यावत्तावद्गुणिता ऋणगता च इति प्रथमः पक्षः। द्वितीयपक्षे रूपस्थाने "व्यासार्द्धवर्गः पलभाकृतिघ्नो दिगग्राकृतिर्द्वादशवर्गनिघ्नी" तद्युतिर्जाता। शोधितपक्षयोर्न्यासः। याव. दिव १ याव चव १ या. च. वि. त्रि २ / विव. त्रिव १ दिव १४४। अथ पक्षयोर्मूलार्थं दिगग्राग्रावर्गवियोगेनापवर्त्तनं कृतम्। अव्यक्तवर्गस्थाने रूपं जातम्। इतरौ राशी अपवर्त्तितौ जातौ लघू। तत्र यो रूपराशिः सोऽत्र प्रथमसंज्ञः कृतः। अव्यक्तस्थाने त्रिज्याग्रापलभाभिहतिर्दिगग्राग्रावर्गवियोगभक्ता द्वाभ्यसंज्ञः कृतः। इदानीं पक्षयोरन्त्यवर्गतुल्यानि रूपाणि प्रक्षिप्याव्यक्तपक्षस्य मूलम् या १ अन्त्यः १। इदं प्रथमपक्षमूलम्। अथाऽन्यवर्गेण

गुणाधाराशेर्मूलं द्वितीयपक्षमूलम्। तेन सह प्रथमपक्षमूलस्य पुनः समीकरणम्। तत्र प्रथमपक्षमूले योऽन्यो रूपराशिः स द्वितीयपक्षमूले समशोधने ऋणगतत्वात् क्षेप्यो भवति दक्षिणगोले। उत्तरगोले तु धनगतत्वाच्छोध्यः।

यदोत्तरगोलेऽग्राया अल्पे दिग्भागे इष्टादिक्छायासाधनं तदा दिगृज्यावर्गादग्रावर्गो न शुध्यति। अतः समक्रियायां विलोमशोधने क्रियमाणे अव्यक्तपक्षमूलेऽन्यः ऋणगतो लभ्यते स च द्वितीयपक्षमूलादधिकः स्यात् तदा,—

> अव्यक्तमूलर्णगरूपतोऽल्पं
> व्यक्तस्य पक्षस्य पदं यदि स्यात्।
> ऋणं धनं तच्च विधाय साध्य-
> मव्यक्तमानं द्विविधं क्वचित् तत् ॥

इत्यस्याः परिभाषाया विषयः। अतस्तत्र द्विधा श्रुतिः स्यादित्युपपन्नम्।

इदानीमहो सर्वासां दिक्छायानामेकमेवानयनमप्रसिद्धमनेनाचार्य्येणोक्तम्। तत्र का प्रतीतिः? इति मन्दानामाशङ्कां परिहरन्नाह।—

> कर्णाग्रया बाहुरिह प्रसाध्य-
> स्त्रिज्याहतोऽसौ प्रभया विभक्तः।
> भवेत् प्रतीत्यर्थमियञ्च दिगृज्या
> तुल्यैव सा स्यात्करणद्वयेऽपि ॥ ५२ ॥

इदं सूत्रेरुक्तमात्रमपि ज्ञायते। इदानीं ये जड़ास्तेषां प्रतीत्यर्थं वक्ष्यमाणप्रकारेण कर्णाग्रया बाहुः साध्यः। स बाहुस्त्रिज्यया गुणश्छायया भक्तो दिगृज्या भवति। यतः शङ्कुमूलाच्छायाग्रगामि सूत्रं यत्र त्रिज्यावृत्ते लगति, सा तस्या-

च्छायाया दिक् । किन्त्वर्कदिग्वैपरीत्येन भवति । एवं मन्दानां प्रतीतिरुत्पाद्या ।

एवं दिङ्नियमेन छायानयनमभिधायेदानीं कालनियमेनाह ।—

उक्ता प्रभाऽभिमतदिङ्नियमेन तावत्
तामेव कालनियमेन च वच्मि भूयः ।
स्यादुन्नतं द्युगतशेषकयोर्यदल्पं
तेनोनितं दिनदलं नतसंज्ञकञ्च ॥ ५३ ॥
अथोन्नतादूनयुताच्चरेण
क्रमादुदग्दक्षिणगोलयोर्ज्या ।
स्यात् सूत्रमेतद्गुणितं द्युमौर्व्या
व्यासार्धभक्तञ्च कलाऽभिधानम् ॥ ५४ ॥

दिवसस्य यद्गतं यच्च शेषं तयोर्यदल्पं तदुन्नतसंज्ञं ज्ञेयम्। तेनोन्नतेनोनीकृतं दिनदलप्रमाणं नतसंज्ञं भवति। अथोन्नतादुन्नतकालादुत्तरगोले चरेणोनिताद्दक्षिणे युताद्या ज्या तत् सूत्रम्। सा सूत्रसंज्ञेत्यर्थः। तत् सूत्रं द्युज्यया गुणितं त्रिज्यया भक्तं कलाख्यं भवति।

अत्रोपपत्तिः ;—यस्मिन् काले छाया साध्या, तस्मिन् काले स्वाहोरात्रवृत्ते यावतीभिर्घटिकाभिः क्षितिजादुच्चतो रविस्तावत्युन्नतसंज्ञा। येन कालेन मध्याह्नादवनतस्तस्य नतसंज्ञा। अथ चरेणोनयुतस्योन्नतकालस्य किल ज्या साध्या। सा च ज्या मध्यावधिर्भवति। स च मध्यप्रदेशोऽहोरात्रवृत्तस्योन्मण्डलसम्पाते भवति। तत उन्मण्डलसम्पाताभ्यामूर्ध्वमहोरात्रवृत्तस्यार्धमधोऽर्धम्। अत उन्मण्डलावधेर्ज्या साध्या। क्षितिजोन्मण्डलयोरन्तरं चरार्धम्। अतश्चरार्धेन वर्जितादुन्नतादुत्तरगोले दक्षिणे तु युतात्। यत उत्तरगोले क्षितिजादुपर्युन्मण्डलं

दक्षिणेऽधः। तस्मात् कालादुया ज्या साधिता सा त्रिज्यावृत्त-परिणता। सा च सूत्रसंज्ञा। अथ यदि त्रिज्यावृत्त एतावती, तदा द्युज्यावृत्ते कियती? इत्यनुपातेन द्युज्यावृत्तपरिणता। सा च कलासंज्ञा।

इदानीं प्रकारान्तरेण कलां तथाथेष्टयष्टिमाह।—

सूत्रं कुजीवागुणितं विभक्तं
चरज्यया स्यादथवा कला सा।
कला पलक्षेत्रजकोटिनिघ्नी
तत्कर्णभक्ता भवतीष्टयष्टिः॥ ५५॥

अथवा तत् सूत्रं कुज्यया गुणितं चरज्यया भक्तं सत् कला भवति। सा च कलाऽष्टधा पलक्षेत्रकोटिभिर्गुण्या स्वस्वकर्णेन भाज्या फलमष्टधेष्टयष्टिर्भवति।

अत्रोपपत्तिः;—अत्र चरज्याकुज्ये त्रिज्याकुज्यापरिणते। अतस्ताभ्यां चानुपातः। यदि चरज्यया कुज्या लभ्यते, तदा सूत्रेण किम्? इति। फलं कला। सा कलाऽहोरात्रवृत्ते कर्णः। सा पलभाक्षकर्णवत् तिरश्चीना जाता। अथ तस्याः कोटिसूत्र-मात्रमानेयम्। तत्रानुपातः।—यदि पलक्षेत्रकर्णेन तत्कोटि-र्लभ्यते तदा कलाकर्णेन किम्? इति। फलमुन्मण्डलशङ्कु-समसूत्रादुपर्यर्कबिम्बादधः ऊर्ध्वं कोटिरूपं भवति। तस्येष्ट-यष्टिसंज्ञा।

इदानीं प्रकारान्तरेणेष्टयष्टिमाह।—

उद्वृत्तशङ्कोरपि सूत्रनिघ्ना-
श्चरज्ययाप्तं यदिवेष्टयष्टिः।

स्पष्टार्थम्।

अत्रोपपत्तिः;—यदि चरज्यया उन्मण्डलशङ्कुर्यष्टिस्तदा सूत्राख्यस्य किम्? इति। त्रैराशिकेन वा यष्टिरित्युपपन्नम्।

इदानीमिष्टान्त्यकाद्धृत्योरानयनमाह।—

रवावुदग्दक्षिणगोलयाते
सूत्रं युतोनं चरजीवया स्यात् ॥ ५६ ॥
इष्टान्त्यकैवं चितिजीवया च
कला युतोना धृतिरिष्टकाले।

यत् पूर्वानीतं सूत्रं तदुत्तरगोले चरज्यया युक्तं दक्षिणे हीनमिष्टान्त्यकासंज्ञं भवति। एवमनेनैव गोलक्रमेण कुज्यया युतहीना सती कलेष्टधृतिसंज्ञा भवति।

अत्रोपपत्तिः;—अत्रोन्मण्डलादुपरितनकालस्याहोरात्रवृत्ते या ज्या सा कला; अधस्तनस्य या ज्या सा कुज्या। तयोरुत्तरगोले योगे कृतेऽर्कबिम्बादुदयास्तसूत्रपर्यन्तमवकर्णगत्या तिर्य्यक् सूत्रं भवति। सेष्टधृतिः। सैव त्रिज्यापरिणता सतीष्टान्त्यका भवति। अतश्चरज्यया सूत्रं युतं जातम्। दक्षिणगोले तून्मण्डलस्य चितिजादधःस्थितत्वात् कला कुज्यया हीना कार्य्या सूत्रं चरज्ययेत्युपपन्नम्।

इदानीमिष्टशङ्कुमाह।—

युतोनितोन्मण्डलशङ्कुनैव
मिष्टाख्ययष्टिर्भवतीष्टशङ्कुः ॥ ५७ ॥

एवमुत्तरगोले उन्मण्डलशङ्कुना युता दक्षिणे रहितेष्टयष्टिरिष्टशङ्कुर्भवति।

अत्रोपपत्तिः;—या पूर्व्वमानीतेष्टयष्टिः सोन्मण्डलशङ्कुप्रसमसूत्रादुपर्य्यूर्द्धरूपा। सा यावदुत्तरगोले उन्मण्डलशङ्कुना युता दक्षिणे रहिता क्रियते तावदर्कबिम्बादवलम्बो भूपर्य्यन्तो भवति। स एवेष्टशङ्कुरित्युपपन्नम्।

उन्नतकालाच्छङ्कुमानीयेदानीं नतकालादाह।—

नतोत्क्रमज्या शर इत्यनेन
हीनान्त्यका वाऽभिमतान्त्यका स्यात् ।
द्युज्याहतो व्यासदलेन भक्तः
कुज्याहतो वा चरशिञ्जिनीघ्नः ॥ ५८ ॥
शरः पृथक्स्थेन फलेन हीना
हृतिर्भवेद्वा हृतिरिष्टकाले ।

इष्टकाले यन्नतं तस्योत्क्रमज्या सा शरसंज्ञा ज्ञेया। अनेन शरेण प्रागानीतान्त्या रहिता सतीष्टान्त्या वा भवति। अथ शरः "द्युज्यागुणो व्यासदलेन भक्तः"; अथवा कुज्यागुण-चरज्यया भक्तः। यत् फलं तदनष्टं स्थाप्यम्। तेन पृथक्-स्थेन फलेन प्रागानीता हृतिर्वर्जिता सतीष्टहृतिर्वा भवति।

अत्रोपपत्तिः ;—गोलक्रमेण त्रिज्या चरज्यया युतोना किलान्त्या भवति। सूत्रं चरज्यया युतोनमिष्टान्त्या भवति। नतोत्क्रमज्यया बाणरूपया त्रिज्या यावदूनिता क्रियते तावत् सूत्रं भवति। अत उक्तं शरोनान्त्येष्टान्त्या भवति। अथ यः शरस्त्रिज्यापरिणतोऽमावनुपातेन द्युज्यापरिणतः कृतः। यदि त्रिज्यया द्युज्या लभ्यते तदा शरेण किम्? इति; अथवा चरज्यया कुज्या लभ्यते तदा शरेण किम्? इति त्रैराशिकाभ्यां यत् फलमुत्पद्यते सा नतोत्क्रमज्या द्युज्यापरिणता जाता। द्युज्या कुज्यया युतहीना किल हृतिः स्यात्। कला तु कुज्यया युतोनेष्टहृतिः स्यात्। अथ नतोत्क्रमज्यया द्युज्यापरिणतया यावद् द्युज्या वर्जिता क्रियते तावत् कला भवति। यदि हृतिरूना क्रियते तदेष्टहृतिर्भवतीत्युपपन्नम्।

अथ स्वाहोरात्रवृत्ते याम्योत्तरवृत्तसम्पाते सूत्रस्यैकमग्रं बद्धा द्वितीयमधःसम्पाते च, तस्य सूत्रस्योदयास्तसूत्रेण यः सम्पातस्तस्मादुपरितनं खण्डं हृतिः। अथाहोरात्रवृत्ते

याम्योत्तरवृत्तसम्पातात् पूर्वतः पश्चिमतश्च नतघटिकाग्रे चिह्नयित्वा तत्र सूत्रं बध्नीयात्। तस्य सूत्रस्य वृत्तिसूत्रस्य च यः सम्पातस्तस्मादधःखण्डं यदुदयास्तसूत्रपर्यन्तं तावत् प्रमाणेष्टवृत्तिः। यत् तूर्ध्वखण्डं सा नतोत्क्रमज्या द्युज्यापरिणता फलसंज्ञा। एवं गोलोपरि दर्शयेत्।

इदानीमिष्टशङ्कुद्वयमाह।—

फलं पलश्रवणकोटिनिघ्नं
तत्कर्णभक्तञ्च तदूर्ध्वसंज्ञम्॥ ५९॥
उन्नतशङ्कोः शरसङ्गुणात् स्या-
च्चरज्ययाप्तं यदि वोर्ध्वसंज्ञम्।
ऊर्ध्वेन हीनो दिनमध्यशङ्कुः
स्यादिष्टशङ्कुर्न ततोऽप्यथैवम्॥ ६०॥

यत् पूर्वफलमनष्टं स्थापितं तदष्टधा पलश्रवणकोटिभिर्गुणितं स्वस्वकर्णेन भक्तं तदूर्ध्वसंज्ञमष्टधा भवति। अथवा प्रागानीतः शर उन्मण्डलशङ्कुना गुणितश्चरज्यया भक्तस्तदूर्ध्वसंज्ञं स्यात्। किं फलानयनप्रयासेन?—तेनोर्ध्वसंज्ञेन दिनार्धशङ्कुरूनितः सन्निष्टशङ्कुर्भवति।

अत्रोपपत्तिः ;—यत् प्राक् प्रदर्शितं वृत्तैकपरिखण्डं फलसंज्ञं तिर्यग्रूपं तस्य कोटिरूपकरणायानुपातः। यदि पलश्रवणकर्णेन तत्कोटिर्लभ्यते तदा अनेन फलसंज्ञेन किम्? इति। लब्धमूर्ध्वं कोटिरूपं भवति। तत् यावद्दिनार्धशङ्कोर्विशोध्यते तावदिष्टशङ्कोः समानमवशेषं भवति; यतस्तत्समसूत्रेणैवार्कबिम्बमहोरात्रवृत्ते वर्त्तते। यदि चरज्यया त्रिज्यावृत्तपरिणतयोन्मण्डलशङ्कुतुल्यमूर्ध्वं लभ्यते तदा शरेण त्रिज्यावृत्तपरिणतेन कियत् इत्येवं तावदूर्ध्वमिति सर्वमुपपन्नम्।

इदानीमिष्टान्त्यकावृतिभ्यां शङ्कुमाह।—

इष्टान्त्यकायाश्च धृतेश्च यद्वा
दिनार्धशङ्कूक्तवदिष्टशङ्कुः ।
शङ्कोश्च दृग्ज्याग्रवणप्रभाः स्यु-
र्धृतेर्न दृग्ज्या सुधियाऽत्र कार्या ॥ ६१ ॥

यथाऽन्त्याया "अन्त्याग्रयोर्न्मण्डलशङ्कुनिघ्नौ" इत्यादिना प्रकारेण दिनार्धशङ्कुरानीतः । तथा यथा धृतेश्च धृतिः "पलश्रवजकोटिनिघ्नौ" इत्यादिना च तथेष्टान्त्यकाया इष्टधृतेश्चेष्टशङ्कुः साध्यः । तथा शङ्कोर्दृग्ज्या ततश्छायाकर्णश्छाया च साध्या ; सा दिनार्धोक्तिवत् साध्येति शेषः । किन्त्वत्र धृतेर्दृग्ज्या धृतिः "पलश्रवभुजेन निघ्नौ" इत्यादिना न साध्या । अयमर्थस्तथाप्युक्तः ।

अत्रोपपत्तिः ;—धृतिर्दक्षिणोत्तरमण्डलगता तया या दृग्ज्या साधिता सा दक्षिणोत्तरमण्डल एव दिनार्धे भवितुमर्हति ; यतस्तत्र दक्षिणोत्तरमण्डलमेव दृङ्मण्डलम्, इह त्वन्यत् । अतो धृतेर्दृग्ज्या न साध्येत्युक्तम् ।

अथ प्रकारान्तरेण छायाकर्णमाह ।—

उद्वृत्तकर्णात् क्षितिजीवनिघ्नात्
समाख्यकर्णादपि तद्धृतिघ्नात् ।
दिनार्धकर्णादथवा धृतिघ्ना-
द्धृत्येष्टयाप्तं यदि वेष्टकर्णः ॥ ६२ ॥

यः पूर्वमुन्मण्डलकर्ण आनीतः स कुज्यया गुण्यः । यश्च समवृत्तशङ्कोः कर्ण उत्पद्यते स तद्धृत्या गुणनीयः । यस्तु मध्यच्छायाकर्णः स धृत्या गुण्यः । तेभ्यस्त्रिभ्य इष्टया धृत्या भागे हृते पृथक् पृथक् त्रिधेष्टकर्णो भवति ।

अत्रोपपत्तिर्व्यस्तत्रैराशिकेन ;—यदि कुज्यातुल्यया धृत्यो-न्मण्डलकर्णस्तद्धृत्या सममण्डलकर्णो धृत्या मध्याह्नकर्णो

लभ्यते तदेष्टहत्या किम्? इति। फलमिष्टकर्णो लभ्यते इत्युपपन्नम्।

इदानीं विशेषमाह।—

यत्र क्वचिच्छुद्धिविधौ यदेह
शोध्यं न शुध्येद्विपरीतशुद्ध्या।
विधिस्तदा प्रोक्तवदेव किन्तु
योगे वियोगः सुधिया विधेयः॥ ६२॥

अथ यत्र क्वचिच्छुद्धिविधौ कर्त्तव्ये शोध्यं यदि न शुध्यति तदा शोध्यादितरराशिं विशोध्य शेषविधिः कर्त्तव्यः; किन्तु व्यस्तशोधने कृते यदा योगविधिरुत्पद्यते तदा वियोगविधिः कार्य्यः।

अत्रोपपत्तिः;—अत्र "अयोन्नतादूनयुताधरेण" इत्यादौ यदोत्तरगोले उन्नतकालाधरं न शुध्यति तदा धरादुन्नतं विशोध्य शेषस्य व्योममण्डलादधश्चरज्याखण्डं सूत्रसंज्ञं भवति; तस्य यदा कला क्रियते तदोन्मण्डलादधः कुज्याखण्डं भवति। कलाया यदेष्टयष्टिः क्रियते तदोन्मण्डलयष्ट्योरूर्द्धं खण्डं भवति। अथ "इनाद्युदग्दक्षिणगोलयाते" इत्यादौ सूत्रं किल चरज्यया युक्तं कार्य्यं, तदिह न कार्य्यम्; किन्तून्मण्डलादधोमुखं यत् सूत्रमागतं तत् चरज्यया विशोध्यम्। शेषमिष्टान्त्या भवति। एवं तदा या कलोन्मण्डलादधोमुख्यागता सा कुज्यया विशोधिता शेषं कुज्याधमानखण्डमिष्टहृतिः। एवमुन्मण्डलादधोमुखी येष्टयष्टिरागता सोन्मण्डलशङ्कोः शोध्या शेषमिष्टशङ्कुर्भवतीति युक्तम् उक्तम्।

इदानीमन्यं विशेषमाह।—

बाणेन्दु १५ नाड्यूननतात् क्रमज्या
त्रिज्यान्विता सैव नतोत्क्रमज्या।

उद्वृत्तशङ्कुस्तु न याम्यगोले
दृश्योऽनुपातार्थमयं प्रसाध्यः ॥ ६४ ॥

यदा नतं पञ्चदशघटिकाभ्योऽधिकं भवति तदोत्क्रमज्याकरणे नतात् पञ्चदशघटिका विशोध्य शेषस्य क्रमजीवा त्रिज्यया युता सती उत्क्रमज्या स्यादित्यवगन्तव्यम्। तथा दक्षिणगोले क्षितिजादधःस्थितत्वादुन्मण्डलशङ्कुरदृश्यस्तथाप्ययमन्येषामनुपातार्थं साध्यः।

अत्रोपपत्तिः ;—उत्क्रमज्या हि बाणरूपा भवति ; यदा नतं पञ्चदशघटिकाऽधिकं तदा पञ्चदशघटिकानामुत्क्रमज्या बाणरूपा त्रिज्यातुल्या भवति। अथ पञ्चदशघटिकाऽधिको यः कालस्तस्य क्रमज्योर्द्धाधोरूपा भवति ; सा यावत् त्रिज्यया युता क्रियते तावद्बाणरूपोत्क्रमज्या भवति। अत्र गोलेऽहोरात्रवृत्ते याम्योत्तरवृत्तात् पूर्वतो नतघटिकाग्रे सूत्रस्यैकमग्रं बद्धा द्वितीयमग्रं पश्चिमतश्च नतघटिकाग्रे निबध्यते, तस्य सूत्रस्य याम्योत्तराहोरात्रवृत्तसम्पातस्य च यदन्तरं तद्बाणरूपम्। एवं तामुत्क्रमज्यां प्रदर्शयेत्।

इदानीमन्यं विशेषमाह।—

मार्तण्डः सममण्डलं प्रविशति स्वल्पेऽपमे स्यात् पलात्
दृश्यो ह्युत्तरगोल एव स विशन् याम्या तदैवास्य भा।
अप्राप्तेऽपि समाख्यमण्डलमिमं यः शङ्कुरुत्पद्यते
नूनं सोऽपि परानुपातविषये नैवं क्वचिद्दृश्यति ॥ ६५ ॥

मार्तण्डस्य यावदुत्तरा क्रान्तिः पलाधिका भवति तावत् सममण्डलादुत्तरस्यैव तस्य दिनार्द्धं भवति, यावत् पलादूना तावद्दक्षिणस्यैव ; अतस्तत्र सममण्डलं प्रविशति। एवं दक्षिणगोलेऽपि पलादूनायां क्रान्तौ रविः सममण्डलं प्रविशति ; किन्तु तत्र क्षितिजादधःस्थितत्वात् प्रविशन् न

दृश्यते। उत्तरगोले तु दृश्यते। अतस्तत्रैव तस्य भा व्याख्या कथनीया। तथा "अप्राप्तेऽपि समाख्यमण्डलमिने यः शङ्कुरुत्पद्यते" इति।—यत्र किल विंशतिर्भागाः पलस्तत्र मिथुनान्तस्थो रविः सममण्डलादुत्तरतो भागचतुष्टयेन दिनार्द्धे भवति। अतस्तस्य सममण्डलमप्राप्तस्यापि यो गणितेन समशङ्कुरुत्पद्यते, तथा तद्धृतिश्च तत्कथमिदं द्वयं वन्ध्यासुतवत्? तदपि प्रदर्श्यते। —उदयास्तसूत्रमध्याद्धृतिसूत्रगत्या सूत्रमेकं प्रसार्य द्वितीयं गोलमध्यात् खस्वस्तिकगामि च। तयोः सूत्रयोर्यो गोलादूर्द्ध्वभागे सम्पातस्तस्मादध ऊर्द्ध्वसूत्रं यत्प्रमाणं तत्प्रमाणस्तदा समशङ्कुरुत्पद्यते। यत्तु तिर्य्यक्सूत्रप्रमाणं तत्प्रमाणा तद्धृतिरुत्पद्यते। तत्राप्यथा भुजकर्णौ। इदमत्रचेतम्। अतोऽन्येषामनुपातार्थमिदं न दुष्यति। दक्षिणगोले भद्दष्टो यः समशङ्कुः सोऽप्यनुपातार्थं न दुष्यतीत्यपि शब्दार्थः।

इदानीं छायातः कालज्ञानमाह।—

> उन्मण्डलकर्णाचरशिञ्जिनीघ्ना-
> द्दिनार्द्धकर्णादथवाऽन्त्यकाघ्नात्।
> इष्टेन कर्णेन हृतादवाप्त-
> मिष्टान्त्यका सैव पृथक् पृथक् स्यात्॥ ६६॥
> पलश्रुतिघ्नत्रिगुणस्य वर्गो
> द्युज्येष्टकर्णाहतिहृद्धवेद्वा।
> इष्टान्त्यका तद्रहिताऽन्त्यकाया
> भवन्ति या उत्क्रमचापलिप्ताः॥ ६७॥
> नतासवस्ते स्युरहर्दलं तै-
> रूनीकृतं चोन्नतकाल एवम्।

उन्मण्डलकर्णाचरज्यया गुणितादथवा मध्याह्नकर्णादन्त्यया गुणितादिष्टकर्णेन भक्तादृयत् फलं लभ्यते सेष्टान्त्या भवति।

उभयत्र तुल्येत्यर्थः। अथ प्रकारान्तरेणेष्टान्त्यामाह।—"पल-श्रुतिघ्नस्त्रिगुणस्य वर्गः" इत्यादि।—त्रिज्यावर्गः पलकर्णेन गुण्यः। द्युज्याया इष्टकर्णस्य च घातेन भाज्यः। यत् फलं लभ्यते सेष्टान्त्यका। तयेष्टान्त्यया रहिताया अन्त्याया यच्छेषं तस्योत्-क्रमेण धनुः कार्य्यम्। तस्य धनुषो यावत्यः कलास्तावन्त-स्तस्मिन् काले नतासवो ज्ञेयाः। तैर्नतासुभिरूनौ युता दिन-दलासव उन्नतासवः स्युः।

अत्रोपपत्तिर्व्यस्तत्रैराशिकेन ;—यद्युन्मण्डलकर्णेन चरज्येष्टा-न्त्यका लभ्यते तदेष्टकर्णेन किम्? इति; अथवा यदि मध्याह्नकर्णेनान्त्या लभ्यते तदेष्टच्छायाकर्णेन किम्? इति। एवमत्रोभयत्र फलमिष्टान्त्यका भवति। अथान्यस्मिन् प्रका-रान्तरे त्रैराशिकत्रयेणोपपत्तिः। यदीष्टच्छायाकर्णेन द्वादशा-ङ्गुलशङ्कुर्लभ्यते तदा त्रिज्याकर्णेन क इति। अत्र त्रिज्याया द्वादश गुण इष्टकर्णो हरः। फलं महाशङ्कुः। अथ तस्य हृतिकरणार्थमनुपातः।—यदि द्वादशाङ्गुलशङ्कोर्विषुवत्कर्णः, कर्णस्तदास्य महाशङ्कोः कः? इति। पूर्वं त्रिज्याया द्वादश गुणः। इदानीं हरः। अतस्तुल्यत्वाद्द्वादशकयोर्गुणहरयोर्नाशे कृते सति त्रिज्यायाः पलकर्णो गुण इष्टच्छायाकर्णो हरः। फलमिष्टहृतिः। अथेष्टान्त्याकरणायानुपातः। यदि द्युज्यया त्रिज्या लभ्यते तदेष्टहृत्या किम्? इति। इदानीं त्रिज्या गुणो द्युज्या हरः। हरयोर्घातो हर इति द्युज्येष्टकर्णाहति-र्भवति। गुणयोर्घाते त्रिज्यावर्गः पलकर्णगुणितो भवति। एवं फलमिष्टान्त्यका। तया वर्जिताया अन्त्याया यदवशेषं सा नतस्योत्क्रमज्या शरसंज्ञा। अतस्तस्या धनुरुत्क्रमेण स नतकालः स्यात्। नतकालो दिनार्द्धात् पतित उन्नतकालः स्यादित्युपपन्नम्।

इदानीं विशेषमाह।—

त्रिज्याऽधिकस्य क्रमचापयुक्ताः

खखाब्धिबाणा धनुरुत्क्रमात् स्यात् ॥ ६८ ॥

यदेष्टान्त्यकावर्जितायां अन्त्यायाः शेषं त्रिज्यातोऽधिकं भवति तदा तस्मात् त्रिज्या शोध्या। शेषस्य क्रमचापलिप्ताः खखाब्धिबाणैर्युता उत्क्रमचापं भवति। ते तदा नतासवो भवन्तीत्यर्थः। अत्र येनाधिकस्य क्रमज्याकरणे युक्तिः सैवाधिकस्य क्रमधनुःकरणे।

इदानीमुन्नतकालस्य प्रकारान्तरमाह।—

इष्टान्त्यका सा चरजीवयोना

युक्ता च गोलक्रमतः क्रमौत्याः।

तच्चापलिप्ताचरयुक्तहीनाः

समुन्नतास्ते यदिवासवः स्युः ॥ ६९ ॥

अथवा सेष्टान्त्यका उत्तरगोले चरज्यया हीना दक्षिणे युता। ततस्तस्याः क्रमज्याभिधापम्। तदुत्तरगोले चरेण युतं दक्षिणे हीनं सत् तत्काल उन्नतासवो भवन्ति। यदेष्टान्त्यकायाश्चरज्योत्तरगोले न शुध्यति तदा चरज्याया इष्टान्त्या शोध्या। शेषस्य चापं तत्र चरं शेष्यं तदिह न क्षिप्यते व्यस्तविशोधने कृते "योगे वियोगः सुधिया विधेयः" इति वचनात् तच्चापं चराद्विशोध्यम्। शेषमुन्नतासवो भवन्ति। उन्नताद्दिनार्धशोधितान्नतासवो भवन्ति।

अत्रोपपत्तिः ;—इष्टान्त्यकाकरणे या क्षेत्रसंस्था कथिता सैवेह तयापीयत् कथ्यते।—इष्टान्त्यकायाश्चरज्या यावदुत्तरगोले शोध्यते, दक्षिणे तु क्षिप्यते, तावदुन्मण्डलादुपरितनकालस्य ज्या सूत्रसंज्ञा भवति। अतस्तस्या धनुरुत्तरगोले तून्मण्डलादधःस्थेन चरेण युतं, दक्षिणे तूपरिस्थेन हीनं सत् क्षितिजादु-

नतकालो भवतीत्युपपन्नम्। यदा तूत्तरगोले चरज्या न शुध्यति तदा व्यस्तविशोधने कृते उन्मण्डलादधोमुखी ज्या सूत्रसंज्ञा भवति। अतस्तस्या धनुषि चराच्छोधिते सति क्षितिजादुन्नतकालो भवतीत्युपपन्नम्।

इदानीं छायातोऽर्कानयनमाह।—

दिनार्द्धद्युतेस्त्रिज्यकाघ्ना हृतायाः
स्वकर्णेन चापांशकाः स्युर्नतांशाः।
दिनार्द्धे वियुक्ता युतास्ते पलांशै-
रुदग्दक्षिणे भाग्रकेऽर्कापमः स्यात्॥ ७०॥
ततः क्रान्तितो वैपरीत्येन भानु-
र्भवेदेतदन्यच्च गोले प्रवक्ष्ये।

मध्याह्नच्छाया त्रिज्यया गुण्या। मध्याह्नच्छायाकर्णेन भाज्या। यत् फलं लभ्यते तस्य चापांशा नतांशा भवन्ति। यद्युत्तरं छायाग्रं तदा दक्षिणाः, यदि दक्षिणं तदोत्तराः। एवं दिनार्द्धे ये नतांशा भवन्ति, ते यदि दक्षिणास्तदा पलांशै-र्वियुक्ताः। यद्युत्तराः तदा पलांशैर्युताः सन्तः क्रान्त्यंशा भवन्ति। ततः क्रान्तितो वैपरीत्येन रविर्भवतीति गोले वक्ष्ये। अन्यच्च बहु गोले वक्ष्ये।

अत्रोपपत्तिः ;—यदि मध्यच्छायाकर्णेन मध्याह्नच्छाया-तुल्यो भुजो लभ्यते, तदा त्रिज्याकर्णेन कः? इति। यदनेन त्रैराशिकेन फलमुत्पद्यते सा याम्योत्तरवृत्ते खमध्यार्कान्त-रांशानां जीवा ; अतस्तस्या धनुर्नतांशाः। ते च छायातो दिग्वैपरीत्येन भवन्तीति प्रसिद्धम्। यदि ते दक्षिणा जाताः तदा तेभ्योऽक्षांशाः शोध्याः। शेषं विषुवन्मण्डलाद्दक्षिणतः क्रान्त्यंशा भवन्ति। यदि तेभ्यः पलांशा न शुध्यन्ति, तदा पलां-शेभ्यो नतांशान् विशोध्य शेषं विषुवन्मण्डलादुत्तराः क्रान्त्यंशा

ज्ञेयाः। यद्युत्तरा नतांशास्तदा पलांशैर्युताः सन्त उत्तराः क्रान्त्यंशा भवन्तीति सुधिया ज्ञातव्यम्।

इदानीं क्रान्तिज्ञाने सति पलज्ञानमाह।—

नतांशापमांशान्तरं तुल्यदिक्के
युतिर्भिन्नदिक्के पलांशा भवेयुः॥ ७१॥

एवं छायातो ये नतांशा ज्ञातास्तेषामपमांशानाञ्च दिक्साम्येऽन्तरं दिग्भेदे योगः पलो भवति।

पूर्वोपपत्तिकथनवैपरीत्येनास्योपपत्तिः कथिता भवति।

इदानीं छायातो भुजज्ञानमाह।—

विभव्याहृतार्काग्रका कर्णनिघ्नी
भवेत् कर्णवृत्ताग्रका व्यस्तगोला।
पलच्छायया सौम्यया संस्कृता स्या-
द्भुजोऽयोत्तरे भापके सौम्यगोले॥ ७२॥
भुजः कर्णवृत्ताग्रयाढ्योऽन्यदासौ
वियुक्तोऽपभा स्यात् तया वा वियुक्तः।
भुजः सौम्यभायेऽन्यदाव्यक्षभज्या-
हृतः कर्णभक्तोऽग्रका चापमोऽसः॥ ७३॥

अर्कस्याग्रेष्टच्छायाकर्णेन गुणा विभज्यया भाज्या फलं कर्णवृत्ताग्रका स्यात्। सा च व्यस्तगोला। उत्तरगोले याम्या; दक्षिणगोले सौम्या। सा पलच्छायया सौम्यया संस्कर्तव्या। पलच्छाया सदैव सौम्या ज्ञेया। तस्याः कर्णवृत्ताग्राया-श्चोत्तरगोलेऽन्तरं याम्ये योगो भुजः स्यात्। भुजो नाम छायाग्रपूर्वापररेखयोर्याम्योत्तरमन्तरम्।

अथ भुजदर्शने कर्णवृत्ताग्रया पलभाज्ञानमाह।—"अथो-त्तरे भापके" इति।—यदोत्तरगोले सममण्डलाद्दक्षिणगते रवावुत्तरं भाग्रं भवति, तदोत्तरभुजः कर्णवृत्ताग्रया युतः सन्

पलभा भवति। अन्यदा तु भुजस्य कर्णवृत्ताग्रायाश्चान्तरं पलभा।

अथ दृष्टे भुजे पलभया कर्णवृत्ताग्राज्ञानमाह।—"तया या वियुतः" इत्यादि।—यदा सौम्यो भुजस्तदा तस्याक्षभायाश्चान्तरमन्यथा योगः कर्णवृत्ताग्रा भवति। सा त्रिज्यागुणा कर्णभक्ताग्रा स्यात्। अग्रा पलश्रवकोटिगुणिता तत्कर्णभक्ता क्रान्तिज्या स्यात्।

अत्रोपपत्तिः ;—समायां भूमौ त्रिज्यावृत्तं विलिख्य दिगङ्कितञ्च कृत्वा तत्र पूर्वतः पश्चिमतश्च यथादिशमग्रां दत्त्वा तदग्रयोरुदयास्तसूत्ररेखां कुर्यात्। अथोत्तरगोले इष्टकाले सममण्डलादुत्तरतोऽहोरात्रवृत्तस्थाद्रवेरधोऽवलम्बस्तदा किल शङ्कुः। शङ्कुमूलस्य प्राच्यपरसूत्रेण सहान्तरं स शङ्कोरुत्तरो भुजः। उदयास्तसूत्रेण सहान्तरं तच्छङ्कुतलम्। अतः शङ्कुतलं यावदग्राया विशोध्यते तावद्भुजोऽवशिष्यते। यावद्भुजो विशोध्यते तावच्छङ्कुतलमवशिष्यते। शङ्कुतलभुजयोर्योगोऽग्रा भवति। यदोत्तरगोले समवृत्तादक्षिणतः शङ्कुस्तदा शङ्कुतलादग्रायां विशोधितायां भुजोऽवशिष्यते। भुजे विशोधितेऽग्रा। भुजाग्रयोर्योगस्तदा शङ्कुतलं भवतीत्यत्र योगवियोगे किं वासनावैचित्र्यम्। इदं महाशङ्कोस्त्रिज्यातुल्ये कर्णे दर्शितम्। महाशङ्कुरनियतः। इदानीं नियतस्य द्वादशाङ्गुलशङ्कोरुच्यते।—महाशङ्कुर्द्वादशभिर्भाज्यः। यल्लब्धं तेन महाशङ्कुर्यावच्छिद्यते तावद्द्वादश लभ्यन्ते। यावत् त्रिज्या छिद्यते तावत् छायाकर्णो लभ्यते। यावदग्रा छिद्यते तावत् छायाकर्णवृत्ताग्रा स्यात्। यावच्छङ्कुतलं छिद्यते तावत् पलभा स्यात्। यावद्भुजश्छिद्यते तावद्भुजो लभ्यते। अथवा त्रैराशिकेन सर्व्वम्। यदि त्रिज्यावृत्ते इदमग्रादिकं लभ्यते तदा कर्णवृत्ते किम्? इति। फलं

तदेव। अतश्छायावृत्ताग्रापलभयोर्योगवियोगाद्भुजः। ततः पलभा तत्तयाग्रेत्युपपन्नम्; किन्तु शङ्क्वाग्राच्चपरयोर्यावदन्तरं तावदेव छायाग्राच्चपरयोः स्यात्; किन्तु दिग्वैपरीत्येन। अतस्तेन कर्णवृत्ताग्रा व्यस्तगोला इत्युपपन्नम्।

अथ मन्दावबोधार्थमुदाहरणम्।—यत्र देशे पञ्चाङ्गुला विषुवती तत्रोत्तरगोले यदा पञ्चांशोनैः सप्तदशभिरधिका नवशत्यग्रा ८१६। ४८। तत्र दिने इष्टच्छायाकर्णस्त्रिंशदङ्गुलः ३० पञ्चदशाङ्गुलो वा। तत्र पृथक् पृथक् भुजं ब्रूहि भुजात् पलभां ताभ्यां चाग्राम् इति। "त्रिभज्याहृताकाग्रका" इत्यादिना त्रिंशदङ्गुले कर्णे जाता कर्णवृत्ताग्रा याम्या। इयं पलच्छायया सौम्यया ५ वियुक्ता जातो याम्यो भुजः ३। अथ भुजे ज्ञाते तेन रहिता कर्णवृत्ताग्रा जाता पलभा ५। पलभाभुजयोर्ज्ञातयोर्योगे जाता कर्णवृत्ताग्रा ८। इयं त्रिज्यागुणा कर्णभक्ता जाताग्रा ८१६। ४८। एवं पञ्चदशाङ्गुले कर्णे कर्णवृत्ताग्रा चतुरङ्गुला ४। सौम्यो भुजोऽङ्गुलम् १। पलभा सैव ५।

इदानीं प्रश्नाः सोत्तराः।—तत्र छायाकर्णे भुजेऽर्के च ज्ञातेऽथवार्काग्राज्ञाने भुजद्वये कर्णद्वये च ज्ञाते यः पलभां वेत्ति तस्योत्कर्षमाह।—

> इष्टेष्टभां योऽत्र दिगर्कवेदो
> छायाद्वयं वा प्रविलोक्य दिग्ज्ञः।
> वेत्त्यक्षभामुद्धतदैववेदि-
> दुर्दर्पसर्पप्रशमे स तार्क्ष्यः॥ ७४॥

स्पष्टार्थम्।

इदानीं प्रश्नमाह।—

भाकर्णे खगुणाङ्गुले ३० किल सखे याम्यो भुजस्त्र्यङ्गुलोऽन्यस्मिन् पञ्चदशाङ्गुले १५ ऽङ्गुलमुदग्बाहुश्च यत्रेक्षितः।

अक्षाभां वद तत्र पट्लतगजै: ८४६ यद्वापमज्यां समां
दृष्ट्वेष्टामनयो: श्रुतिञ्च सभुजां द्रागब्रूहि मेऽक्षप्रभाम् ॥ ७५ ॥

स्पष्टार्थं प्रश्नद्वयम् । प्रथमप्रश्नस्योत्तरमाह ।—

भाद्वयस्य भुजयो: समाशयो-
र्व्यस्तकर्णहतयोर्यदन्तरम् ।
ऐक्यमन्यककुभो: पलप्रभा
जायते श्रुतिवियोगभाजितम् ॥ ७६ ॥

अत्रैकी बाहुर्याम्यस्त्रयम् ३ । तत्र कर्णस्त्रिंशत् ३० । अन्य: सौम्यो रूपम् १ । तत्र कर्ण: पञ्चदश १५ । अनयोर्भुजयोरन्योऽन्यकर्णहतयोर्भिन्नदिशोर्योग: ७५ । अयं कर्णान्तरेण भक्तो जाता पलभा ५ । एकदिशोस्त्वन्तरम् ।

अत्रोपपत्तिस्तावदुच्यते ; . सा चाव्यक्तक्रियया । अत्र पलभाप्रमाणं यावत्तावत् या १ । इयं दक्षिणेन भुजेन युता जाता कर्णवृत्ताग्रा या १ रू ३ । इयं त्रिज्यागुणा कर्णभक्ता जाताऽग्रा या. त्रि १ त्रि ३ / ३० । एवमन्यभुजादपि पलभा यावत्तावत् या १ । इयमुत्तरेण भुजेनोना कर्णवृत्ताग्रा भवति या १ रू १̇ । इयं त्रिज्यागुणा कर्णभक्ता जाताऽग्रा या त्रि१ त्रि १̇ / १५ । अनयोरन्योऽन्यच्छेदगुणयोश्छेदगमे समशोधनार्थं न्यास:

या त्रि १५ रू त्रि ४५ ।
या त्रि ३० रू त्रि ३०

अनयोस्त्रिज्ययापवर्त्ते कृते "एकाव्यक्तं शोधयेदन्यपक्षात्" इत्यादिना यावत्तावच्छेषं कर्णान्तरतुल्यं हरो जात: १५ । रूपशेषमन्योऽन्यकर्णाहतभुजयोर्योगो जातो भाज्य: ७५ । अत उपपन्नं "भाद्वयस्य भुजयो: समाशयो:" इत्यादि ।

अथ द्वितीय: प्रश्न: ।—अथवा पट्लतगजै: ८४६ तुल्यां क्रान्तिज्यां दृष्ट्वा तयोरेकं कर्णं भुजञ्च दृष्ट्वा पलभां ब्रूहीत्यस्योत्तरमाह ।—

क्रान्तिज्याकर्णवधात् त्रिज्याप्तकृतिर्लघुः स दोःकृत्या ।
हीनोऽग्निमनु१४४घ्नः स्यादाद्योऽथ परो भुजः क्षतेन्द्र१४४घ्नः ॥७७॥
तौ लघुवेदेन्द्रा१४४न्तरभक्तौ परवर्गतो यदाद्याप्तात् ।
मूलं परयुतवियुतं सौम्ये याम्ये भुजे पलभा ॥ ७८ ॥

क्रान्तिज्येष्टच्छायाकर्णेन गुण्या त्रिज्यया भाज्या । फलस्य वर्गो लघुसंज्ञः पृथगवस्थाप्यः । स लघुर्भुजवर्गेणोनो वेदेन्द्रैः १४४ गुण्यः । स आद्यसंज्ञः स्यात् । अथ भुजो वेदेन्द्रैः १४४गुणितोऽन्यसंज्ञः स्यात् । तावाद्यान्यौ तस्य लघोर्वेदेन्द्राणां १४४ चान्तरेणापवर्त्यौ । ततोऽन्यवर्गादाद्येन युताद्यन्मूलं तदुत्तरे भुजे सति परेण युतं याम्ये वर्जितं पलभा भवतीति सूत्रार्थः ।

अस्योपपत्तिर्मध्यमाहरणबीजेन । यदा त्रिंशदङ्गुलः कर्णः, यत्र व्यङ्गुलो २ याम्यो भुजः, षट्कृतगजेन्दुमिता ८४६ क्रान्तिज्या, तत्र तावद्यते।—पलभाप्रमाणं यावत्तावत् या१ । एवं याम्येन भुजेन युता जाता कर्णहस्तापा या १ रू २ । अथ प्रकारान्तरेण कर्णहस्तापा।—तत्र क्रान्तिज्या पलकर्णगुणा द्वादश १२ भक्ता त्रिज्यापा स्यात् । तत्र पलकर्णो न ज्ञायते किन्त्वव्यक्तात्मकः पलकर्णवर्गो ज्ञायते । न चैवम् । पलभावर्गो द्वादशवर्गयुतः पलकर्णवर्गः स्यात् याव १ रू १४४ "वर्गेण वर्गं गुणयेद्भजेच्च" इति क्रान्तिज्यावर्गोऽनेन गुण्यो द्वादशवर्गेण भाज्यः फलमग्रावर्गः स्यात् याव क्रांव १ रू क्रांव १४४ / १४४ १४४ । अथ "त्रिज्यावृत्ताग्रा पलकर्णनिघ्नी" इति कर्णवृत्ताग्रार्थं गुण्यत्रिज्यावर्गेण भाज्यः । एवं कर्णहस्तापावर्गो भवति । याव क्रांव कव रू १४४ क्रांव कव / त्रिव १४४ । अत्र भाज्यराशावव्यक्तवर्गस्थाने क्रान्तिज्यावर्गे ७१५७१६ कर्णवर्गगुणे त्रिज्यावर्गे ११८१९८४४ त्रियर्थं आगतो लघुसंज्ञः । रूपस्थाने च क्रान्तिज्यावर्गे कर्णवर्गगुणे

वेदेन्द्र १४४ गुणे च त्रिज्यावर्गच्छिदे जातो लघुर्वेदेन्द्रगुणोऽङ्गुलानि तदधो व्यङ्गुलानि च बालावबोधार्थं स्थापितानि। तस्य राशेर्यश्छेदः सोऽपि त्रिज्यावर्गच्छिन्नस्तदधो न्यस्तस्तथा

याव [illegible] रू ७८५०
दर्शनम्। २१ २४। य एव क्रान्तिज्यावर्गः कर्णवर्गगुण-
छेदः १४४।

त्रिज्यावर्गच्छिन्नः सैव क्रान्तिज्याकर्णवधात् त्रिज्यासङ्गतिः। अयं राशिः कर्णहत्तायावर्गः पूर्व्वकल्पितायाः अस्याः कर्णहत्तायायाः या १ रू २। वर्गेणानेन याव १ या ६ रू ८। समः कार्य्यः। अयं समच्छेदकरणार्थं अङ्कवर्गेण १४४ गुणितस्तत-

याव १४४ या ८६४ रू ११९६
श्छेदगमे कृते शोधनार्थं न्यासः ५६ ७८५० सम-
याव या ००० रू
२१ २४

शोधने कृते जातमुपरिपक्षे लघुवेदेन्द्रान्तरतुल्यो यावराशिः। कृतेन्द्र १४४ घ्नो भुजो द्विगुणश्च याराशिः। द्वितीयपक्षे जातो

याव ८९ या ८६४
२९
लघुर्दोःकृत्या हीनोऽब्धिमनु ११४ घ्नश्च। ६५५४ अयं
रू २४

रूपराशिरान्यसंज्ञः कल्पितः। यो मध्यराशिरर्चितः स भुजः कृतेन्द्र १४४ घ्नो जातः। सोऽन्यसंज्ञः कल्पितः। अथपक्षौ

याव १ या ९/४० रू ०।
लघुवेदेन्द्रान्तरेणापवर्त्तितौ जातौ याव ० या ० रू ७२/१५। अनयोः

पक्षयोरपवर्त्तितान्यवर्गं ८१/२१ तुल्यानि रूपाणि प्रक्षिप्य मूले

४
या १ रू ९/२०
गृहीते या ० रू ८/२०। अनयोः पुनः साम्ये क्रियमाणे व्यक्तपक्षस्य मूलमव्यक्तपक्षमूलस्य रूपैरन्यतुल्यैरूनमेकेन भक्तं सञ्जाता पलभा ५। उत्तरे भुजे त्वन्यतुल्यरूपाणि ऋणं भवन्ति तैः शोध्यत्वाद्युतं पलभा स्यादित्युपपन्नम्।

इदानीं सममण्डलप्रश्नः।—

दिनकरे करिवैरिदल ४ । १५ स्थिते
नर १२ समा नरभापरदिङ्मुखी।
भवति यत्र पटौ पुटभेदने
कथय तान्त्रिक। तत्र पलप्रभाम् ॥ ७९ ॥

स्पष्टार्थम्। इदानीमस्योत्तरमाह।—

त्रिज्यार्कघातः श्रुतिहृच्चरः स्याद्
यत् क्रान्तिमौर्वीसमवृत्तशङ्कोः।
वर्गान्तरान्मूलमनेन भक्ता
क्रान्तिज्यका सूर्य्य १२ हताक्षभा स्यात् ॥ ८० ॥

"त्रिज्यार्कघातः श्रुतिहृच्चरः स्यात्" इति साधारणम्। त्रिज्याद्वादशघातस्य यस्याश्छायायाः कर्णेन भागो क्रियते तस्याः सम्बन्धी महाशङ्कुर्लभ्यते। अत्रानुपातः।—यद्यनेन कर्णेन द्वादशाङ्गुलशङ्कुस्तदा त्रिज्याकर्णेन कः? इति। एवमत्रोदाहरणे यो लभ्यते स समशङ्कुः। स कर्णः। सिंहार्द्धगतस्यार्कस्य क्रान्तिज्या भुजः। तद्वर्गान्तरपदं कुज्योनिता तद्धृतिः कोटिः। इदं पलक्षेत्रम्। यद्यनया कोट्या क्रान्तिज्या भुजो लभ्यते तदा द्वादशाङ्गुलमितया किम्? इति। फलं पलभेति त्रैराशिकेनोपपन्नम्। अत्र सममण्डलशङ्कुर्द्वादशी ज्या २४११। सिंहार्द्धे ४। ०१५ क्रान्तिज्या पञ्चांशोना अष्टवसुमन्दाः ८८७। ४८। अनयोर्वर्गान्तरपदेन द्वादशगुणा क्रान्तिज्या भाज्या। तथाऽस्याः वर्गः ८७५७४८। शङ्कुवर्गः ५८०८७६११। अनयोरन्तरम् ४८१४०१२ मूलम् २२२१।१५ अनेन भक्ता द्वादशगुणा क्रान्तिज्या ११८५२। १६। लब्धा तत्र देशे पलभा सवांशपञ्चाङ्गुला ५।२०।

इदानीमन्यौ प्रश्नौ।—

मार्त्तण्डः सममण्डलं किल यदा दृष्टः प्रविष्टः सखे !
काले पञ्चघटीमिते दिनगते यद्वा नते तावति।
केनाप्युज्जयिनीगतेन तरणेः क्रान्तिं तदा वेत्सि चेत्
मन्ये त्वां निपुणं सगर्वगणकोन्मत्तेभकुम्भाङ्कुशम् ॥ ८१ ॥

हे गणक ! केनचित् किलोज्जयिनीगतेन यदा दिनगते पञ्चघटीमिते काले मार्त्तण्डः सममण्डलं प्रविष्टो दृष्टस्तदा कियती क्रान्तिज्या ? इत्येकः प्रश्नः । अथाऽन्यः ।—तावति पञ्चघटीमिते नते वा काले सममण्डलं प्रविष्टो दृष्टस्तदा च या क्रान्तिज्या तां त्वं चेद्वेत्सि तदा सगर्वगणकोन्मत्तेभकुम्भाङ्कुशं निपुणोद्भूतं त्वामहं मन्ये । इति स्पष्टार्थम् ।

इदानीं प्रथमप्रश्नस्योत्तरमाह ।—

या स्याद्रवेरुन्नतकालजीवा-
ऽभीष्टा हृतिः सा प्रथमं प्रकल्प्या ।
भक्ता १२ ऽभाघातहृताक्षकर्ण-
कृत्योद्धृता स्यादपमज्यकाप्याः ॥ ८२ ॥
चरादिकैरिष्टहृतिः प्रसाध्या
गुण्यास्तया क्रान्तिगुणोऽसकृच्च ।
तदाद्यहृत्या विहृतः स्फुटः स्यात्
सहस्ररश्मौ सममण्डलस्थे ॥ ८३ ॥

रवेः सममण्डलप्रवेशे य उन्नतकाल उद्दिष्टस्तस्य जीवा सा तावत् प्रथममिष्टहृतिः कल्प्या । ततो द्वादशगुणया पलभया गुण्या पलकर्णवर्गेण भाज्या । सा किल स्थूला क्रान्तिज्या भवति । तस्याः क्रान्तिज्याया द्युज्यां कुज्यां चरज्यां चरञ्च कृत्वा "अथोन्नतादूनयुताच्चरेण" इत्यादिनेष्टहृतिः साध्या । तया पूर्वमागता क्रान्तिज्या गुण्या । आद्यहृत्या कल्पितया भाज्या । एवं स्फुटाऽसकृत् क्रान्तिज्या भवति ।

अत्रोपपत्तिः ;—अभीष्टनतकालजीवातुल्या प्रथमं तद्धृतिः कल्पिता। तस्या अनुपातेन शङ्कुः। यदि पलकर्णेन द्वादशकोटिस्तदा तद्धृतिकर्णेन किम्? इति। अत्र तद्धृतेर्द्वादश गुणः पलकर्णो हरः। फलं सममण्डलशङ्कुः। पुनरन्योऽनुपातः।—यदि पलकर्णेनाक्षभा भुजो लभ्यते, तदा सममण्डलशङ्कुतुल्येन कर्णेन किम्? इति। फलं क्रान्तिज्या स्थूला। अस्याः क्रान्तिज्यायाश्चरादिकेन "अयोन्नतादूनयुताश्चरेण" इत्यादिनेष्टधृतिः साध्या। तां तद्धृतिं प्रकल्प्य पुनः क्रान्तिज्या साध्या। एवमसकृद्यावदविशेषः। तत्रासकृत्कर्मणि त्रैराशिकेन क्रियोपसंहारः कृतः। यदि कल्पितया धृत्येयं क्रान्तिज्या लभ्यते, तदेदानीमानीतया किम्? इति। एवं क्रान्तिज्या स्फुटा स्यादित्युपपन्नम्।

इदानीं द्वितीयप्रश्नयोरुत्तरमाह।—

तदा नतज्यात्रिभजीवयोर्य-
द्वर्गान्तरं तत् पलभाकृतिघ्नम्।
तेनोद्धृतो व्यासदलस्य वर्गो
येदेन्द्र १४४ निघ्नोऽथ सरूपमध्या ॥ ८४ ॥
व्यासार्द्धवर्गादिह्वतात् पदं स्यात्
क्रान्तिज्यका सा त्रिभशिञ्जिनीघ्नी।
जिनांशमौर्व्या विहृतास्य चापा-
दर्के प्रवक्ष्ये च यथा रविः स्यात् ॥ ८५ ॥

यदा सममण्डलं प्रविष्टो दृष्टस्तदा या नतघटिकास्तासां जीवा। तस्या वर्गेण त्रिज्यावर्गो रहितः। तत पलभावर्गेण गुणः। तेन भाज्यः। कस्त्रिज्यावर्गः? किं विशिष्टः? येदेन्द्र १४४ गुणितः। तत्र यत् फलं लभ्यते तेन सैकेन त्रिज्यावर्गोद्धृताद्यन्मूलं लभ्यते सा क्रान्तिज्या स्यात्। सा

क्रान्तिज्या त्रिज्यागुणा जिनांशज्यया भक्ता यत् फलं तस्य चापाद्यया रविर्भवति तथाग्रे वक्ष्ये।

अत्रोपपत्तिरव्यक्तकल्पनया। तत्र क्रान्तिज्याप्रमाणं यावत्तावत् १। क्रान्तिज्यावर्गोनस्त्रिज्यावर्गो द्युज्यावर्गः स्यात्। याव १ त्रिव १। तदा नतज्यावर्गेणोनस्त्रिज्यावर्गः सूत्रसंज्ञस्य वर्गः स्यात्। सूत्रं द्युज्यागुणं त्रिज्याहृतं कलासंज्ञं स्यात्। तत्र कला नाम कुज्योना तद्धृतिः। अत्र "वर्गेण वर्गं गुणयेद्भजेच्च" इति सूत्रसंज्ञस्य वर्गेण द्युज्यावर्गो गुणस्त्रिज्यावर्गेण भाज्यः। फलं कलावर्गो भवति। तत्र कला कोटिः। क्रान्तिज्या भुजः। समशङ्कुः कर्णः। इदं पलक्षेत्रम्। अतस्तेनानुपातः।—यदि द्वादशकोटेः पलभाभुजस्तदा कुज्योनिततद्धृतेः कलासंज्ञायाः किम्? इति। एवमत्र कलावर्गस्य पलभावर्गो गुणः। द्वादशवर्गो हरः। फलं क्रान्तिज्यावर्गः। एवमत्र द्युज्यावर्गस्य सूत्रवर्गविषुवतीवर्गयोर्घातो गुणस्त्रिज्यावर्गद्वादशवर्गयोः १४४ घातो १३०२०५७५३६ हरः। अत्र सूत्रवर्गेण पलभावर्गगुणेन भाज्येऽपवर्त्तिते जातो द्युज्यावर्ग एव याव १ रू ११८१८८४४। भाजके चापवर्त्तिते जाता अष्टौ विवंशा: ७। ४०। अयं द्युज्यावर्गस्य छेदः। दर्शनम्।

याव १ रू ११८१८८४४ । अयं क्रान्तिज्यावर्गस्यास्य याव १ सम
छेदः ७। ४०।

इति समच्छेदीकृत्य छेदगमे पक्षयोः शोधनार्थं न्यासः

याव १ रू ११८१८८४४। । अत्र शोधने कृतेऽव्यक्ताङ्केनानेन
याव ७। ४० रू ०००००।

८। ४० व्यासार्द्धवर्गाद्भक्तान्मूलं लब्धं यावत्तावन्मानम्। सैव क्रान्तिज्या ११६८। एवं "नतज्याविभजीवयोर्यद्वर्गान्तरम्" इत्यादि सर्वमुपपन्नम्।

अथान्यं प्रश्नमाह।—

मार्त्तण्डे सममण्डलं प्रविशतिच्छाया किलाष्टाङ्गुला
दृष्टाष्टासु घटीषु कुत्रचिदपि स्थाने कदाचिद्दिने।
अर्ककान्तिगुणं तदा वदसि चेदक्षप्रभां तत्र च
त्रिप्रश्नप्रचुरप्रपञ्चचतुरं मन्ये त्वदन्यं न हि ॥ ८६ ॥

प्रश्नोत्तरमाह।—

अत्रापि साध्योन्नतकालजीवा
पूर्व्वं तु सैवेष्टहृतिः प्रकल्प्या।
ततोऽर्कनिघ्नी समशङ्कुभक्ता
पलश्रुतिः स्यात् पलभा ततश्च ॥ ८७ ॥

पलप्रभाघ्नः समशङ्कुरक्ष-
कर्णोद्धृतः स्यादपमज्यकातः।
चरादिकेनेष्टहृतिस्ततोऽक्ष-
कर्णोऽसकृत् क्रान्तिगुणश्च तस्मात् ॥ ८८ ॥

अत्र किल षोडशाङ्गुला सममण्डलच्छाया। विंशत्यङ्गुलः कर्णः। यद्यनेन कर्णेन द्वादशाङ्गुलशङ्कुस्तदा त्रिज्याकर्णेन कः? इति। फलं सममण्डलशङ्कुः। तथा च प्रागभिहितं "त्रिज्यार्कघातः श्रुतिहृत्नरः स्यात्" इति। अतोऽत्र ज्ञातः समशङ्कुः पञ्चांशोनाख्यङ्कनखाः २०६२। ४८। अत्रापि साध्योन्नतकालजीवेति।—यथा पूर्व्वप्रश्नभङ्गे उन्नतकालज्येष्टहृतिः प्रकल्पिता तथाऽत्राप्युन्नतकालज्येष्टा हृतिः प्रथमं प्रकल्प्या। सार्क १२ द्वादशगुणा सममण्डलशङ्कुना भाज्या। यत् फलं स स्थूलः पलकर्णः स्यात्। तस्मात् पलभा साध्या। तया पलभया सममण्डलशङ्कुर्गुण्यः पलकर्णेन भाज्यः। फलं स्थूला क्रान्तिज्या। तस्याः क्रान्तिज्याया द्युज्याकुजरादिकं प्रसाध्य "अथोन्नतादूनयुतान्तरेण" इत्यादिनेष्टहृतिः साध्या। तस्याः पुनरक्षकर्णस्ततः क्रान्तिश्च। एवमसकृद्यावदविशेषः।

अत्रोपपत्तिः ;—अत्र योऽन्तकालज्या सा तद्धृतिः कल्पिता। तयाऽनुपातः। यदि समशङ्कोस्तद्धृतिः कर्णस्तदा द्वादशाङ्गुलशङ्कोः कः? इति। फलं पलकर्णः। ततोऽन्योऽनुपातः।—यदि पलकर्णस्य पलभा भुजस्तदा समशङ्कुतुल्यस्य कर्णस्य कः? इति। फलं क्रान्तिज्या। यतः समशङ्कुः कर्णः। क्रान्तिज्या भुजः। कुज्योमिता तद्धृतिः कोटिः। इदं पलक्षेत्रम्। एवमसत्कर्मणा पलभाक्रान्तिज्ये स्फुटे भवत इत्युपपन्नम्।

इदानीमिष्टप्रभाप्रश्नमाह।—

पञ्चाङ्गुला गणक यत्र पलप्रभा स्यात्
तत्रेष्टभा नवमिता दशनाड़िकासु।
दृष्टा यदा वद तदा तरणिं तवास्ति
यद्यत्र कौशलममलं गणिते सगोले॥ ८८॥

स्पष्टम्। अथोत्तरमाह।—

इष्टान्त्यकामुन्नतकालमौर्वी-
तुल्यां प्रकल्प्याऽथ तया विभक्तः।
इष्टप्रभाशङ्कुहतोऽक्षकर्ण-
स्त्रिज्यागुणो द्वादशभाजितश्च॥ ९०॥
द्युज्या भवेत् तत्कृतिवर्जितायाः
त्रिज्याकृतेर्मूलमपक्रमज्या।
इष्टान्त्यका प्राग्वदतोऽसकृच्च
द्युज्यापमज्या च ततः खरांशुः॥ ९१॥

अत्र नवाङ्गुलेष्टभा। तत्कर्णः पञ्चदशाङ्गुलः १५। "त्रिज्यार्कघातः श्रुतिहृन्नरः स्यात्" इति जात इष्टभाया महाशङ्कुः शरबाणाद्रिदस्राः कलाचतुर्विंशतिविकलाऽधिकाः २७५५। २४। अथोन्नतकालस्य ज्या सा प्रथममिष्टान्त्यका कल्प्या। तयेष्टान्त्यकयेष्टच्छायामहाशङ्कुरक्षकर्णेन गुणितो भाज्यः। यत्

फलं तत् त्रिज्यया गुणितं द्वादशमिश्च भाजम्। फलं स्फुला द्युज्या स्यात्। अथ त्रिज्याकृतेर्द्युज्याकृतिविवर्जिताया मूलं क्रान्तिज्या। ततः क्रान्तिज्यायाश्चरादिकं साध्यम्। ततः "अयोऽन्नतादूनयुताच्चरेण" इत्यादिनेष्टान्त्यका साध्या। ननु प्रश्ने गोलस्यानिर्दिष्टत्वात् कथमन्त्यां साधयेत्? सत्यम्। तत्र युक्तिः।— यस्मिन् गोले कल्पिते कल्पिताया इष्टान्त्यकाया आसन्ना साधितेष्टान्त्यका भवति स गोलः कल्प्यः। तस्या इष्टान्त्यकायाश्च पुनर्द्युज्या। ततः क्रान्तिज्या; तत इष्टान्त्यका। एवमसकृत् क्रान्तिज्या स्फुटा भवति। ततो रविर्व्यस्तविधिना।

अत्रोपपत्तिर्विलोमगणितेन। अथ मध्यग्रहज्ञात एव। ततोऽनुपातः। यदि द्वादशाङ्गुलशङ्कोः पलकर्णः कर्णस्तदा महाशङ्कोः कः? इति। फलमिष्टहृतिः स्यात्। हृतिः त्रिज्यागुणा यदि द्युज्यया क्रियते तदेष्टान्त्या लभ्यते; यदीष्टान्त्यया क्रियते तदा द्युज्या लभ्यते। अत इयमिष्टहृतिः त्रिज्यागुणा कल्पितेष्टान्त्यया भक्ता फलं द्युज्या। अत उक्तम्—"इष्टान्त्यकासुयतकालमौर्वीतुल्यां प्रकल्प्याऽथ तया विभक्तः। इष्टप्रभाग्रहृतोऽक्षकर्ण-स्त्रिज्यागुणो द्वादशभाजितश्च॥ द्युज्या भवेत्—" इति। ततः क्रान्तिज्या। ततश्चरादिकेनेष्टान्त्येत्युपपन्नम्।

अथान्यं प्रश्नमाह।—

> यत्र क्षितिज्या शरसिद्धतुल्या २४५
> स्यात् तद्धृतिस्तत्त्वकुरामसङ्ख्या ३१२५।
> तत्राक्षभार्कौ गणक! प्रचक्ष्व
> चेदक्षजक्षेत्रविचक्षणोऽसि॥ ८२॥

अस्योत्तरमाह।—

> कुज्योनतद्धृतिहृता खतशक्रनिघ्नी
> कुज्यैव यत् फलयदं पलभा भवेत् सा।

कुज्या हता रविभिरत्रभया विभक्ता
क्रान्तिज्यका भवति भानुरतो विलोमम् ॥ ८३ ॥

स्पष्टार्थम् ।

अत्रोपपत्तिः ;—तत्र पलभाप्रमाणं यावत्तावत् या १ । अतोऽनुपातः । यदि पलभामिते भुजे द्वादश कोटिस्तदा कुज्यामिते का ? इति । फलं क्रान्तिज्या । पुनर्द्वितीयं त्रैराशिकम् । यदि पलभामिते भुजे द्वादश कोटिस्तदा क्रान्तिज्यामिते का ? इति । फलं कुज्योनिता तद्धृतिर्भवति । एवमत्र कुज्याया २४५ द्वादशवर्गो गुणः पलभावर्गो हरः । तथा कृते न्यासः $\frac{\text{क } १५१८० ।}{\text{छेदः याव } १ ।}$ । इदं कुज्योनतद्धृतिसममितिपक्षौ समच्छेदीकृत्य छेदगमे शोधनार्थं न्यासः $\frac{\text{याव } ० \text{ क } १५१८० ।}{\text{याव } १८८० \text{ क } ० ।}$ । पक्षौ नखशैलैः ७२० अपवर्त्य पक्षयोर्मूले गृहीते जातं पलभामानं सार्द्धानि चोऽङ्गुलानि ४$\frac{१}{२}$ । यदि पलभया द्वादश कोटिस्तदा कुज्यया किम् ? इति । फलं क्रान्तिज्या ८४० । एवं "कुज्योनतद्धृतिः" इत्यादि सर्व्वमुपपन्नम् ।

अथान्यं प्रश्नमाह ।—

क्रान्तिज्यासमशङ्कुतद्धृतियुतिं कुज्योनितां वीक्ष्य यो
विंशत्यग्ररसैः ६७२० मितामथ परां पञ्चद्वचन्द्रैर्मिताम् १८६० ।
कुज्याग्रापमशिञ्जिनीयुतिमिनं वेत्त्यक्षभां चापि तं
ज्योतिर्वित्कमलावबोधनविधौ वन्दे परं भास्करम् ॥ ८४ ॥

स्पष्टम् । इदानीमस्योत्तरमाह ।—

क्रान्तिज्यासमशङ्कुतद्धृतियुतिः कुज्योनिता या तया
कुज्याग्रापमशिञ्जिनीयुतिमितैः १२ गुण्या पृथक्स्थां भजेत् ।
लब्धं स्यात् पलभा पलश्रुतिपलच्छायाऽर्कयुत्या ततो
भाज्याऽन्याऽथ पृथक् स्थितासमपमज्या स्यात् ततो भास्करः॥८५॥

अत्र या "क्रान्तिज्यासमशङ्कुतद्वृतियुतिः कुज्योनिता" विंशत्यभ्ररसैः ६७२० मिता दृष्टा तया याऽन्या "कुज्याग्रापमशिञ्जिनीयुतिः" षड्‌ङ्कचन्द्रैर्मिता १८६० दृष्टा तां द्वादशभिः सङ्गुण्य पृथक् स्थापयित्वा भजेत्। लब्धं पलभा स्यात्। ततः पलकर्णः कार्यः। पलकर्णस्य पलभाया द्वादशानाञ्च योगेन तां पृथक् स्थापितां भजेत्। लब्धं क्रान्तिज्या स्यात् ८४०। अत्र पलभा ३।२० पलकर्णः १२।१०। अत्र समशङ्कुः ३०००। अग्रा ८७५। कुज्या २४५। तद्वृतिः ३१२५।

अत्रोपपत्तिर्बीजक्रियया। तत्राज्ञातानां बहुत्वादनेकवर्णकल्पनया वर्गगतया क्रिया प्रसरति न निर्वहति च। अतोऽत्र सद्युक्तिः। क्रान्तिज्या तावत् पलक्षेत्रकोटिः। कुज्या भुजः। तथा समशङ्कुः कोटिः। अग्रा भुजः। तथा तद्वृतिः कुज्योनिता कोटिः। क्रान्तिज्या भुजः। अत्र यः प्रथमं दृष्टो योगः स कोटीनां योगः। द्वितीयो भुजानाम्। भुजकोटियोगौ भुजकोटित्वं न त्यजतः। अतोऽनुपातः।—यदि कोटियोगमितया कोट्या भुजयोगमितो भुजो लभ्यते, तदा द्वादशाङ्गुलमितया कोट्या किम्? इति। फलं पलभा। अथ क्रान्तिज्याज्ञानार्थं युक्तिः। येयं कुज्याग्रापमशिञ्जिनीयुतिः सा पलक्षेत्रभुजकोटिकर्णानाञ्च भवति। तत्र कुज्या भुजः। अग्रा कर्णः। क्रान्तिज्या कोटिः। अतोऽत्रानुपातः।—यदि पलभापलकर्णद्वादशानां योगेन द्वादशकोटिर्लभ्यते, तदा कुज्याग्रापमशिञ्जिनीनां योगेन किम्? इति। एवमत्र कोटिः क्रान्तिज्या लभ्यते। अतो विलोमविधिना रविरित्युपपन्नम्। अथान्यं प्रश्नमाह।—

क्रान्तिज्यासमशङ्कुतद्धृतियुतिं कुज्योनितां वीक्ष्य यः
पूर्णाभ्राब्धिमहीमिता१४४०मथ परां खाभ्राष्टभूसम्मिताम्१८००।

अग्राज्यासमशङ्कुतद्धृतियुतिं वेत्स्यग्रभार्कौ च तं
ज्योतिर्वित्कमलावबोधनविधौ वन्दे परं भास्करम् ॥८६॥

सुगमम् ।

अस्योत्तरमाह ।—

क्रान्तिज्यासमशङ्कुतद्धृतियुतिः कुज्योनिताद्यो हृता
तेनाग्रासमशङ्कुतद्धृतियुतिः सूर्याहताग्रश्रुतिः ।
स्यात् तस्याः पलभा पलश्रुतिपलच्छायार्कं १२ युत्योद्धृता-
दाद्यादग्रभयाहताच्च भवति क्रान्तिज्यकातो रविः ॥ ८७ ॥

अत्रोपपत्तिः ;—अत्रापि सद्युक्तिः । अत्र क्रान्तिज्या कोटिः । अग्रा कर्णः । तथा समशङ्कुः कोटिः । तद्धृतिः कर्णः । कुज्योनिता तद्धृतिः कोटिः । समशङ्कुः कर्णः । एकः कोटीनां योगो दृष्टः । अन्यः कर्णानाम् । तत्र त्रैराशिकम् । यदि कोटियोगतुल्यकोटेः कर्णयोगतुल्यः कर्णो लभ्यते, तदा द्वादशाङ्गुलकोटेः कः ? इति । फलं पलकर्णः स्यात् । ततः पलभा । ततः पूर्ववत् क्रान्तिज्येत्युपपन्नम् ।

इदानीमन्यं प्रश्नमाह ।—

यत्र त्रिवर्गेण मिता पलाभा
तत्र त्रिनाड़ीप्रमितं चरं स्यात् ।
यदा तदार्कं यदि वेत्सि विद्वन् ।
सांवत्सराणां प्रवरोऽसि नूनम् ॥ ८८ ॥

इदानीमस्योत्तरमाह ।—

चरज्यकार्काभिहतिस्त्रिमौर्व्या
भक्तास्तवर्गोऽग्रभया सनिघ्ना ।
युतोऽग्र तन्मूलहृता चरज्या
सूर्या १२ हता क्रान्तिगुणस्ततोऽर्कः ॥ ८९ ॥

अत्रोपपत्तिः ;—क्रान्तिज्याप्रमाणं यावत्तावत् १ । इय-

मत्तप्रभागुणा द्वादश १२ भक्ता कुज्या स्यात्। या, वि $\frac{१}{१२}$।
इदानीं प्रकारान्तरेण कुज्यावर्गः। तत्र यावत्तावद्वर्गोनस्त्रिज्यावर्गो द्युज्यावर्गः स्यात्। तेन गुणितचरज्यावर्गस्त्रिज्यावर्गभक्तः कुज्यावर्गः स्यात्। $\frac{\text{याव. च व १ विव च व १}}{\text{छेदः विव १}}$। अयं पूर्वकुज्यावर्गेणानेन याव. विव $\frac{१}{१४४}$। सम इति पक्षौ समच्छेदीकृत्य छेदगमे कृते शोधनार्थं न्यासः $\frac{\text{याव. विव. विव१ रू ०}}{\text{याव. चव. १४४ विव. चव. १४४}}$। अनयोस्त्रिज्यावर्गेणापवर्त्तितयोः समीकरणे क्रियमाणे एवं जातम्। अधस्तनपक्षे यावर्गेण चरज्यावर्गद्वादशवर्गयोर्घातसमेन त्रिज्यावर्गच्छिन्नेनर्णगतेन शोध्यत्वाद्धनगतेनोपरितनराशिर्यावर्गो विषुवतीवर्गतुल्यो युतः कृतस्तस्य मूलेनाधस्तनरूपराशेर्मूलं चरज्याद्वादशघाततुल्यं भक्तं फलं क्रान्तिज्येत्युपपन्नम्।

अथवा तद्देशीयैश्चरखण्डकैश्चरज्यासाधनव्यस्तविधिना स्फुटो रविः स्यात्। अत्र चरं घटीद्वयम् २। अस्य ज्या १०६२। अर्कगुणिता जाता १२७४४। इयं त्रिज्याभक्ता लब्धम् १ ४२ २४ अस्य वर्गः १३ ४२ ०। अक्षभावर्गेणानेन ८१ युतः ८४ ५१ ०।
अस्य मूलम्। ९ ४१ ४१। अनेन हृता चरज्या सूर्यां १२ हृता लब्धं क्रान्तिज्या १३०९।८२।

अथान्यं प्रश्नमाह।—

द्युज्यकापमगुणार्कदोर्ज्यका-
संयुतिं खखखबाण ५००० सम्मिताम्।
वीक्ष्य भास्करमवेहि मध्यमं
मध्यमाहरणमस्ति चेच्छ्रुतम्॥ १००॥

स्पष्टार्थम्।

इदानीमस्योत्तरमाह।—

द्युजयापक्रमभानुदोर्गुणयुतिस्तिथ्यु १५ द्धृताब्धया ४ हता
स्यादाद्यो युतिवर्गतो यम२गुणात् सप्तामरा२३७प्तोनिता: ।
नागाद्र्यङ्कदिगङ्कका: ९१०९७८ पदमतस्तेनाद्य ऊनो भवेद्
व्यासार्द्धेऽष्टगुणाब्धिपावक३४३८मिते क्रान्तिज्यका तोरवि:॥१०१॥

योद्दिष्टा रविदोर्ज्याद्युज्याक्रान्तिज्यानां युति: सा पृथक्स्था चतुर्भिर्गुण्या पञ्चदशभिर्भाज्या । फलमाद्यसंज्ञं स्यात् । अथ युतिकृते: पृथक्स्थायां द्विगुणाया: सप्तामरै: २३७ भागे यल्लभ्यते तेनोनिता: कार्य्या: । के ? नागाद्र्यङ्कदिगङ्कका: । अत एभ्यो यत् पदं तेनाद्य ऊनोऽतः सन् क्रान्तिज्या भवति । सा चक्रकलाव्यासार्द्धे । अस्या रवि: साध्य: ।

अत्रोपपत्ति: ;—क्रान्तिज्याप्रमाणं यावत्तावत् १ । इयं त्रिज्यागुणा जिनांशज्यया भक्ता रविदोर्ज्या स्यात् । या १४१६/११९० । इयं क्रान्तिज्यायुक्ता । उद्दिष्टयुते: शोध्या । शेषं द्युज्या भवति या ४८१२५ क ६९८५००० / विद: क ११९० । अथ प्रकारान्तरेण द्युजयावर्ग: याव १ त्रिव १ । अस्य पूर्वद्युजयावर्गेण साम्यम् । तत्र पक्षौ समच्छेदीकृत्य छेदगमे शोधने च कृते मूलग्रहणार्थं यावत्तावद्वर्गाङ्केन पक्षयोश्छिद्यमानयोर्भाज्यभाजकयोर्यथायोगमपवर्त्तने च क्रियमाणे एवंविधा क्रियोपपद्यते । अत्र क्रान्तिज्या ३६०/१५ । द्युज्या १५००/५ । दोर्ज्या ११११/२९ । रवि: १९/१८/३२ ।

इदानीमन्यं प्रश्नमाह ।—

क्रान्तिज्याममयङ्कसद्युतिमहोजीवापकाणां युति-
र्दृष्टा व्योमखरपञ्चखेचर ८५०० मिता पञ्चाङ्गुलाक्षप्रभे ।
देशे तत्र पृथक् पृथग्गणक ता गोलेऽसि दक्षोऽस्तज-
श्चेदक्षोदविधौ विचक्षण ! ममाचक्ष्वाविलक्षोऽसि चेत् ॥ १०२ ॥

स्पष्टार्थम्।

इदानीमस्योत्तरमाह।—

*क्रान्तिज्यां विषुवत्प्रभारविहतैस्तुल्यां प्रकल्प्यापरा-*
*श्छायाग्रासमशङ्कुतद्धृतिमहीजीवा अभीष्टास्ततः।*
*छायाद्यास्तद्युतिभाजिताः पृथगथ प्रोद्दिष्टयुत्या हता*
*उद्दिष्टा खलु यद्युतिः पृथगिमा व्यक्ता भवन्ति क्रमात्॥ १०३॥*

स्पष्टार्थम्।

अत्रोपपत्तिः ;—अत्र क्रान्तिज्येष्टा कल्प्या, साऽत्र द्वादशगुणविषुवच्छायातुल्या कल्पिता यथेतरा निरग्रा लभ्यन्ते। क्रान्तिज्या ६०। समशङ्कुः १५६। तद्धृतिः १६८। कुज्या २५। अग्रा ६५। एवमस्याः क्रान्तिज्यायाः ६० एताः साधिताः। अतस्त्रैराशिकम्। यत्र यासां युतिस्तदाद्धृता तासां युतिः कार्या। तया जाता ४७५। यद्यनया युत्यैताः क्रान्तिज्याद्याः पृथक् पृथक् पञ्च जाता लभ्यन्ते तदानया खाम्बरपञ्चखेचर ८५०० मितया किम्? इति। एवं लब्धा क्रान्तिज्या १२००। समशङ्कुः ३१२०। तद्धृतिः ३३८०। महीजीवा ५००। अग्रका १३००।

इदानीमन्यानयनस्य व्याप्तिदर्शनार्थमन्यं प्रश्नमाह।—

*अयापमज्याचितिभिस्त्रिनीनां*
*योगं सहस्रद्वितयं २००० विदित्वा।*
*पृथक् पृथक् ता गणक! प्रचक्ष्व*
*कुट्टा सगोले गणिते मतिश्चेत्॥ १०४॥*

अत्रापि "क्रान्तिज्यां विषुवत्प्रभारविहतैस्तुल्यां प्रकल्प्य" इत्यादिना कल्पिता क्रान्तिज्या। ततोऽग्राकुज्ये च साधिते। क्रान्तिज्या ६०। अग्रा ६५। कुज्या २५। आसां युत्यानया १५० यद्येताः पृथक् पृथक् लभ्यन्ते, तदा सहस्र-

द्वितयेन २००० किम् ? इति । लब्धा क्रान्तिज्या ८०० । भुजा $\frac{८६६}{४०}$ । कुज्या $\frac{२२२}{२०}$ ।

इदानीं नलकयन्त्रेण ग्रहविलोकनप्रकारमाह ।—

विधाय बिन्दुं समभूमिभागे
ज्ञात्वा दिशः कोटिरतः प्रदेया ।
प्रत्यङ्मुखी पूर्वकपालसंस्थे
पूर्वामुखी पश्चिमगे ग्रहे सा ॥ १०५ ॥
कोट्यग्रतो दोरपि याम्यसौम्यो
बिन्दोश्च भा भाग्रभुजाग्रयोगात् ।
सूत्रञ्च बिन्दुस्थनराग्रसक्तं
प्रसार्य कर्णाकृतिसूत्रगत्या ॥ १०६ ॥
इषुप्रमूलं नलकं निवेश्य
वंशादयाधारमयास्य रन्ध्रे ।
विलोकयेत् खे खचरं किलैवं
जले विलोमं तदपि प्रवक्ष्ये ॥ १०७ ॥

यस्मिन् दिने यं ग्रहं ग्रहयुतिं शृङ्गोन्नतिं वा नलकयन्त्रेण दर्शयितुमिच्छति, तस्मिन् दिने तस्मिन् काले तस्य ग्रहस्य ग्रहच्छायोक्तप्रकारेण छायां कर्णं भुजं कोटिञ्चानीय नलकयन्त्रं निवेशयेत् । तत्रायं सूत्रावतारः ।—"विधाय बिन्दुं समभूमिभागे" इति । जलसमीकृतायां भूमौ बिन्दुं कृत्वा ध्रुवादिना दिक्साधनञ्च कृत्वा बिन्दोरुपरि प्राच्यपरा रेखा कार्य्या । ततो यदि तदा ग्रहः पूर्वकपाले वर्त्तते, तर्हि बिन्दोः सकाशात् कोटिः प्रत्यङ्मुखी देया ; यदि पश्चिमकपाले ग्रहस्तदा पूर्व्वाभिमुखी । ततः कोट्यग्राद्भुजो याम्यः सौम्यो वा यथादिग्दातव्यः । तथा बिन्दोः सकाशात् छायाप्रमाणा शलाका भुजाग्राभिमुखी प्रसार्य्या । छाया-

तावति दूरे तदुच्चप्रमाणं भुवः सकाशादधोमुखं कृतं सद्दृष्ट्वा पुरुषेण जले दृश्यत इति जलदृष्ट्योर्वस्तुशक्तिः। अधोमुख-न्यस्तस्य वेणोरग्रे सूत्रस्यैकमग्रं बद्ध्वा द्वितीयमग्रं पुरुषदृष्टि-मानीयमानं यत्र भुवं भित्त्वा निर्गच्छति तद्बिन्दुस्थानम्। तत्र जलपात्रम्। पुरुषस्य दृगुच्छ्रयः शङ्कुः। पुरुषजलान्तरं छाया। दृक्सूत्रं कर्ण इति सर्वमुपपन्नम्।

इदानीमस्योपसंहारश्लोकमाह।—

दर्शयेदिहविचरं दिवि के वा-
नेहसि द्युचरदर्शनयोग्ये।
पूर्वमेव विरचय्य यथोक्तं
रञ्जनाय सुजनस्य नृपस्य ॥ १०८ ॥

स्पष्टार्थम्।

इति श्रीमहेश्वरोपाध्यायसुतभास्कराचार्यविरचिते सिद्धान्तशिरोमणिवासनाभाष्ये मिताक्षरे त्रिप्रश्नाधिकारस्तृतीय: ॥ ३ ॥

अत्राधिकारे पद्यसङ्ख्या सपादा नवशती ॥ ९१५ ॥

---

अथ पर्वसम्भवस्थानमाह।—

कलेर्गताब्दा रवि १२ भिर्विनिघ्ना-
श्चैत्रादिमासैः सहिताः पृथक्स्थाः।
द्विघ्नाः खनागाङ्कगजांश ८९८ हीनाः
पञ्चाङ्ग ६५ भक्ताः प्रथमान्विताः स्युः ॥ १ ॥
मासाः पृथक् ते द्विगुणास्त्रिपूर्ण-
यामा ५०३ ऽधिकाः स्याद्वनृपांश १६९ युक्ताः।
त्रिभि ३ र्विभक्ताः फलसंगपूर्वं
मासोऽधतुल्यैश्च ग्रहैर्युतः स्यात् ॥ २ ॥

सपातसूर्योऽस्य भुजांशका यदा
मनू १४ नकाः स्याद्ग्रहणस्य सम्भवः ।

कलिमुखादेरारभ्य गताब्दा द्वादश १२ गुणाश्चैत्रादिगतमासयुताः पृथक्स्था द्विघ्नाः स्वकीयेन गजाङ्गाष्ट ८६८ भागिभेनाः पञ्चषष्ठ्या ६५ भक्ताः फलमधिमासाः । तैः पृथक्स्था युताश्चान्द्रमासा भवन्ति ।

अत्रोपपत्तिस्त्रैराशिकेन । यदि युगरविमासैः ५१८४०००० युगाधिमासा १५९३३०० लभ्यन्ते तदैभिः कलिगतैः किम् ? इति । अत्राधिमासानामर्द्धेनानेन ७९६६५० गुणकभाजकावपवर्त्तितौ जातं गुणकस्थाने द्वयं २ भागहारस्थाने पञ्चषष्टिः किञ्चिदभ्यधिका ६५ । ४ । २१ । अतः पञ्चषष्टिगुणानामधिमासानां १०३५६४५०० द्विगुणानां रविमासानाञ्च १०३६८०००० यदन्तरं ११५५०० । तेन द्विगुणा रविमासा भक्ता लब्धमष्टाङ्गगजाः ८६८ । तैर्द्विगुणाः कलिगतमासा भाज्याः । यल्लभ्यते तेन तान् वर्जितान् कृत्वा पञ्चषष्ट्या ६५ भागे हृतेऽधिमासा लभ्यन्त इत्युपपन्नम् ।

तैरधिमासैः पृथक्स्था युताश्चान्द्रमासाः स्युः । ते चान्द्रमासाः पृथग् द्विनिघ्नास्त्रिपूर्णबाणैः ५०३ सहिताः स्वकीयेनाङ्कनृपांशेन १६९ युक्तास्त्रिभिर्भाज्याः । फलसंज्ञार्थं ग्राह्यम् । तानंशांस्त्रिंशता ३० विभज्य फलं राशयस्तदुपरि स्थाप्याः । राशिस्थाने मासौघतुल्या राशयश्च क्षेप्याः । एवमसौ सपातसूर्यो भवति । तस्य भुजांशा यदि चतुर्दशभ्य १४ ऊना भवन्ति, तदा चन्द्रग्रहणस्य सम्भवो वेदितव्यः ।

अत्रोपपत्तिः ;—ग्रहणं हि मानैक्यार्द्धादूने विक्षेपे भवति । चन्द्रग्रहे मध्यमं मानैक्यार्द्धं षट्पञ्चाशत् कलाः ५६ । सूर्यग्रहे द्वात्रिंशत् ३२ । षट्पञ्चाशत् कलाः शरो द्वादशभिर्भुजभागै-

